दिव्यामृतार्थमथितेमहाब्धौदेवासुरैर्वासुकिमन्दराद्यैः । भूमे-र्महावेगविघूर्णितायास्तंकूर्ममाधारगतं नमामि ॥ १ ॥ समुद्र-कांचीसविदुत्तरीया वसुंधरामेरुकिरीटभारा । दन्ताग्रतोयेसनमुद्धृता भूस्तमादिकोलं शरणं प्रपद्ये ॥ २ ॥ इत्युपविश्यचन्दनादिकाष्ठकृतपट्टंतुशिवशिखरासनयोर्मध्यदेशे समाधाय तस्योपरिपुस्तकं न्यसेत् ।

( दिव्यामृतार्थं ) इत्यादि दो श्लोकोंवाला लिखा है, उसको उच्चारण करके बैठे, फिर आसनके आगे अर्थात् शिवशिखर और आसनके बीचमें पूर्वोक्त चन्दनादि काष्ठका बना हुआ पट्टा रखकर उसपर यही पुस्तक स्थापित करे ।

अथात्मचित्तप्रकृतिशांत्यर्थमिन्द्रियाणामेकाग्रवृत्तिकरणार्थं च पुष्पांजलिं गृहीत्वास्वगुरोः स्मरणंकुर्यात् यथा--नमामिसद्गुरुंशान्तं प्रत्यक्षं शिवरूपिणम् । शिरसायोगपीठस्थंसर्वकामार्थसिद्धये ॥ १ ॥ श्रीगुरुंपरमानन्दंनमाम्यानन्दविग्रहम् । यस्यसान्निध्यमात्रेणचिदानन्दायते परम् ॥ २ ॥ अखण्डमण्डलाकारं व्याप्तंयेनचराचरम् । तत्पदंदर्शितं येन तस्मै श्रीगुरवेनमः ॥ ३ ॥ अज्ञानतिमिरांधस्यज्ञानांजनशलाकया । चक्षुरुन्मीलितंयेन तस्मै श्रीगुरवेनमः ॥ ४ ॥ नमोस्तुगुरवेतस्मैस्वेष्टदेवस्वरूपिणे । यस्य वागमृतंहंतिविषं संसारसंकुलम् ॥ ५ ॥ प्रातः

प्रभृति सायांतंसायादिप्रातरंततः । यत्करोमिजगन्नाथतदस्तुतवपूजनम् ॥ ६ ॥ इतिगुरुंमनसाध्यात्वाप्रणम्य चपुस्तकंप्रतिपुष्पांजलिंदद्यात् ।

उसके बाद अपने चित्तकी वृत्ति शांत करने और मन आदि सब इंद्रियोंको एकाग्र करनेकेहेतु हाथमें पुष्पांजलि लेकर ( नमामि सद्गुरुंशांतं ) श्रीगुरुंपरमानंदं ) इत्यादि छःश्लोक जो मूलपाठमे लिखे हैं, उन्हें सावधानीसे अर्थ समझते हुए पढकर गुरुका ध्यान और प्रणाम करे और पुष्पांजलि लेकर पुस्तकपर चढा दे ।

अथदिक्शोधनंकुर्यात्तद्यथा--क्रमतः पूर्वादिदशदिक्षु पीतसर्षपान् विकीर्य इमंमंत्रं पठेत् । अपसर्पंतुते भूताथेभूताभुविसंस्थिताः येभूताविघ्नकर्तारस्ते नश्यंतु शिवाज्ञया । पश्चात्तालत्रयमपिदद्यात् । तत्रायंमंत्रः ( ॐ आंहुंफट् स्वाहा ) अथतीर्थावाहनम् । तत्रतन्निमित्तकृतविवरे गंगादिजलंयथालब्धं पूरयित्वागोदुग्धेनकुशादिकृतकूर्चेनाभिषिंचन्नावाहयेत्तत्रायं मंत्रः पुष्कराद्यानितीर्थानिगंगाद्याः सरितस्तथा । आगच्छंतुमहाभागास्तिष्ठंत्वत्रशिवार्चने । तत्रकर्पूराढ्यानक्षतान् प्रक्षिप्यैव क्रमतः पठेत् ।

अथ दिग्बन्धनम्

उसके बाद दिक्शोधन करे अर्थात्–( अपसर्पंतुतेभूता ) इत्यादि मंत्र जो मूलपाठमें लिखा है उसको पढते हुए एक एक

मंत्रसे थोडी थोडी पीली सरसों पूर्व आदि एक एक दिशामें फेंकता जाय। जब दशों दिशाओंमें फेंक चुके तब ( ॐआंहुंफट्स्वाहा ) यह मंत्र पढकर तीनवार ताल फटकावे। फिर तीर्थोंका आवाहन करे अर्थात् आवाहनके निमित्तसे शिवशिखरकी दाहिनी ओर पूर्व दिशामें जो एक विवर बनाया था, उसमें इस अग्रोक्त मंत्रको पढते हुए अक्षत आदिसे आवाहन करे, मन्त्र पुष्कराद्यानितीर्थानि गंगाद्याःसरितस्तथा। आगच्छंतुमहाभागास्तिष्ठंत्वत्रशिवार्चने। इसके बाद दिग्बंधनकरे अर्थात् कपूर लगायेहुए तंदुल इन अग्रोक्तमंत्रोंसे पूर्व आदिक्रमसे दशों दिशाओंमें फेंके यथा मंत्रः॥

ॐ शिवाय क्षितिमूर्त्तये नमः प्राच्याम् १ ॐ भवाय जलमूर्त्तये नमः ईशाने २ ॐ रुद्राय अग्निमूर्तये नमः उदीच्याम् ३ ॐ उग्राय वायुमूर्तयेनमोवायव्ये ४ ॐ भीमाय आकाशमूर्तयेनमः प्रतीच्याम् ५ ॐ पशुपतये यजमानमूर्तये नमो नैर्ऋत्याम् ६ ॐ महादेवाय सोममूर्तये नमो दक्षिणे ७ ईशानाय सूर्यमूर्तये नमः आग्नेय्याम् ८ ॐ शंकरायइंद्रमूर्तये नमः आकाशे ९ ॐ भूतेशाय शेषमूर्तये नमः पाताले १०

इति दिग्बंधनम्

ततश्च मंगलार्थं घटादिषु यथोचितं सामान्यतया केवलं गणेशपूजनं कुर्यात्। तद्यथा पूजाप्रकारः—तत ईशानकोणे

अव्रणं कलशमक्षतभूषितं स्थापयित्वा भूमिस्पर्शनमंत्रः—भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्रीं । पृथिवीं-यच्छपृथिवींदृ ँ हपृथिवींमाहि ँ सीः इति भूमिस्पर्शनम् । धान्यमसीतिधान्यम् । धान्यमसि धिनुहि देवान्प्राणायत्वोदाना-यत्वा व्यानाय त्वा दीर्घामनुप्रसितिमायुषेधान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वामहीनां-पयोसि । तस्योपरिकलशं स्थापयेत् । आजिघ्रकलशं मह्यात्वा-विशंत्विंदवः पुनरूर्ज्जानिवर्तस्वसानः सहस्रं धुक्ष्वोरुधारा पयस्वतीपुनर्माविशताद्रयिः । वरुणस्येति उदकं निक्षिपेत् । वरुणस्योत्तंभनमसि वरुणस्य स्कंभसर्जनी स्थोवरुणस्यऋत-सदन्यसिवरुणस्य ऋतसदनमसिवरुणस्यऋतसदनमासीद । वसोः पवित्रमितिवस्त्रं कंठे वेष्टयेत् । वसोः पवित्रमसि शतधारं वसोः पवित्रमसिसहस्रधारं देवस्त्वासवितापुनातु वसोः पवित्रे-णशतधारेणसुप्वाकामधुक्षः । याः फलिनीर्या इतिफलम् । याः फलनीर्या अफला अपुष्पायाश्चपुष्पिणीः । बृहस्पति-प्रसूतास्तानो मुंचंत्व ँ हसः ॥ परिवाजेतिपंचरत्नम् । परि-वाजपतिः कविरग्निर्हव्यान्यक्रमीत् दधद्रत्नानिदा शुषे ॥ हिरण्यगर्भइतिदक्षिणाम् । हिरण्यगर्भः समवर्त्तताग्रे भूतस्य-जातः पतिरेकऽआसीत् । सदाधारपृथिवींद्यामुतेमांकस्मैदेवा-यहविषाविधेम । गंधद्वारामिति गंधम् । गंधद्वारांदुराधर्षांनित्य-

पुष्टांकरिषिणीम् । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् । या- ओषधीरिति सर्वौषधीः । या ओषधीः पूर्वाजातादेवेभ्यस्त्रियुगं- पुरा । मनेनुबभ्रूणामह ५ शतंधामानि सप्त च स्योनापृथि- वीतिसप्तमृदः । स्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छानः शर्मसप्रथाः ॥ कांडात्कांडादितिदूर्वाः । काण्डात् काण्डात्प्ररो- हंती पुरुषः परुषस्परि । एवानोदूर्वेप्रतनुसहस्रेण शतेनच ॥ अश्वत्थेव इति पंचवल्लवान् । अश्वत्थेवोनिषदनंपर्णेवावेसति- ष्कृता । गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ पवित्रेस्थइति- पवित्राणि। पवित्रेस्थोवैष्णव्यौसवितुर्वःप्रसवऽउत्पुनाम्यच्छिद्रेणः पवित्रेण सूर्यस्यरश्मिभिः । पूर्णा दर्वीतितंडुलपूरितपात्रम् ! पूर्णादर्विपरापतसुपूर्णा पुनरापत ॥ वस्नेवव्विक्रीणावहाइषभूर्ज शतक्रतो ॥ श्रीश्चते इति श्रीफलं निधाय । श्रीश्चते लक्ष्मी- श्चपत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौव्यात्तम् । इष्ण- न्निषाणासुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ मनोजूतिरिति प्रतिष्ठा। मनोजूतिर्जूषतामाज्यस्य बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टम् यज्ञ ५ समिमंदधातु विश्वेदेवासऽइहमादयंतामों ॥ ३ ॥ प्रतिष्ठ । भूर्भुवः स्वः गणेशवरुण इहागच्छ इहतिष्ठ गणानांत्वेति गणपतिं तत्त्वायामीति वरुणमावाह्य--ॐ गणानान्त्वा गणपति ५ हवा- महे प्रियाणान्त्वा प्रियपति ५ हवामहे निधीनान्त्वा निधिपति ५ हवामहे व्वसो मम । आहमजानिगर्भधमात्वमजासिगर्भ-

धम् ॥ १ ॥ ॐ तत्त्वायामि ब्रह्मणावंदमानस्तदाशास्तेयज-मानोहविर्भिः । अहेडमानोवरुणेहबोध्यरुश ५ ससानऽआयु-ॐ भूर्भुवः स्वः गणेशवरुण इहागच्छ इहतिष्ठ पंचोपचारेण-गणेशंवरुणंपूजयेत् नमस्कारम् । कलशेगंगाद्यावाहनम् । सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्य-दुरितक्षयकारकाः । ततः कलशाभिमंत्रणम् । कलशस्यमुखे विष्णुः कंठे रुद्रः समाश्रितः । मूलेतस्यस्थितो ब्रह्मामध्ये मातृगणाः स्मृताः । कुक्षौतुसागराः सप्त सप्तद्वीपावसुंधरा ! ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वणः । अंगैश्चसहिताः सर्वे कलशंतुसमाश्रिताः । ततः कलशप्रार्थना—देवदानवसंवादेमथ्य-माने महोदधौ । उत्पन्नोसि तदाकुंभविधृतोविष्णुनास्वयम् । त्वत्तः सर्वाणितीर्थानि देवाः सर्वेत्वयिस्थिताः । त्वयितिष्ठंति-भूतानित्वयिप्राणाः प्रतिष्ठिताः । शिवःस्वयं त्वमेवासिविष्णुस्त्वं च प्रजापतिः आदित्यावसवोरुद्राविश्वेदेवाः सपैतृकाः त्वयि-तिष्ठंतिसर्वेपि यतः कामफलप्रदाः । त्वत्प्रसादादिमंयज्ञंकर्तुमीहे-जलोद्भव । सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा । इति प्रार्थना । पुनराचम्य यथासंभावितसंकल्पं कुर्यात् । अर्थाद्यदिपूर्वदिवसः स्यात्तदा मुख्ययजमानमाहूयादौवरणविधिनाकारयेत् पश्चात् द्वितीयमपिसंकल्पंतद्दिवसनिमित्तात्कार्यप्रमाणाच्चाचार्यः स्वयं कुर्यात् ॥

इसके बाद—मंगलके निमित्तसे घटादिकोंमें यथोचित सामान्यतया केवल श्रीगणेशजीका पूजन करे जैसे मूलपाठमें पूजाका प्रकार लिखा है। फिर आचमन कर यथायोग्य संकल्प करे अर्थात् जो पहिला दिवस हो तो मुख्य यजमानको बुलाकर पहले वरण—विधिसे संकल्प कराने बादमें द्वितीय संकल्प भी उस दिवसके निमित्तसे कार्यके अनुमानपर आचार्य आप करे।

यद्वा स्वस्यार्थमेव पूजनं स्यात्तदा प्रथमं नियमितदिवसानुच्चार्य पूजनस्य हेतुं चोच्चार्य स्वनाम्नैव संकल्पं कृत्वा पूजाकाले द्वितीयमपि संकल्पं तद्दिवसनिमित्तात्कार्यप्रमाणाच्च स्वनाम्नैव कुर्यात् ॥

यद्वाः—अपने निमित्तसे आपही कर्ता बने तो नियम किये हुए दिवसोंको उच्चारण करके अपने नामसे संकल्प करे बादमें पूजाके समय द्वितीय संकल्प उस दिवसके नाम और कार्यके अनुमानपर करे द्वितीय संकल्प जैसा नित्यप्रति करना उचित है पह पहले दिवस द्वितीय संकल्प गिनती है ॥

अथ विनियोगः

ॐ अस्य श्रीपार्थिवेश्वरचिंतामणिविद्यामंत्रस्य निग्रहानुग्रहकर्ता ब्रह्माऋषिः कामदुघागायत्रीछन्दः शीघ्रवरप्रदस्वरूपीपार्थिवेश्वरो देवता हौं बीजं श्रीं शक्तिः नम, कीलकं मम

सर्वाभीष्टकामनासिद्ध्यर्थं वा अमुकाभीष्टसिद्ध्यर्थं पूजने विनियोगः। यद्वा ममअमुकयजमानस्यामुककामनासिद्ध्यर्थं पूजने विनियोगः ॥

उसके बाद तीर्थादि जलोंसे विनियोग करे यथा–( ॐ अस्य श्रीपार्थिवेश्वरचिंतामणि ) इत्यादि न्यास विधि पर्यंत जो विनियोग-मंत्र मूलपाठमें लिखा है, उसको पढकर पूजनका विनियोग छोडे विनियोग भी एक तो मुख्य अपने नामसे उस दशामें कि जब अपने निमित्तसे पूजन किया हो अथवा किसी यजमानके निमित्तसे किया हो तब यजमानका नाम लेकर करना चाहिये वे ही दो भेद मूलपाठसे समझने चाहिये ( यथार्थ पहले विनियोग ही मुख्य संकल्प एक लेख्य मितिके समान है ) विनियोगके बादमें न्यासविधि करनी चाहिये ॥

अन्य न्यासविधिः

ॐ हौं हीं जूँ स सर्वज्ञाय शिवाय अंगुष्ठाभ्यां नमः १ ॐ हौं हीं जूं सँ सर्वतृप्तशक्तिशिवाय तर्जनीभ्यां नमः २ ॐ हौं हीं जूँ स, नित्यमलुप्तशक्तिशिवाय मध्यमाभ्यां नमः ३ ॐ हौं हीं जूँ सः दिव्यज्ञानशक्तिशिवाय अनामिकाभ्यांनमः ४ ॐ हौं हीं जूँ सः नित्यानन्दशक्तिशिवाय कनिष्ठिकाभ्यां नमः ५ ॐ हौं हीं जूँ स- अनंतशक्तिशिवाय करतलकरपृष्ठाभ्यांनमः

६ ( एवं हृदयादिः ) ॐ हौं हीं जूँ सः सर्वज्ञाय शिवाय हृद-यायनमः १ ॐ हौं हीं जूँ सः नित्यमलुप्तशक्तिशिवाय शिखायै वषट् ३ ॐ हौं हीं जूँ सः दिव्यज्ञानशक्तिशिवाय कवचाय हुम् ४ ॐ हौं हीं जूँ सः नित्यानंदशक्तिशिवाय नेत्राभ्यां वौषट् ५ ॐ हौं हीं जूँ सः अनंतशक्तिशिवाय अस्त्राय फट् ६ इति न्यायविधिः ।

यथा-( ॐ हौं ह्री जूँ सः ) इत्यादि छः मंत्रोंसे करन्यास और इन्हीं छः मंत्रोंसे हृदयादि अंगन्यास मूल पाठमें लिखे हैं, सो सब उसी प्रकारसे करने चाहिये ।

अथ ध्यानम्

ध्यायेनित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखि-लभयहरं पंचवक्त्रंत्रिनेत्रम् ॥ १ ॥ कर्पूरगौरं करुणावतारं संसारसारंभुजगेन्द्रहारम् । सदारमंतंहृदयारविन्देभवं भवानीस-हितंनमामि ॥ २ ॥ कैलासपीठासनमध्यसंस्थंभक्तैश्वनंद्यादिभि-रर्च्यमानम् । भक्तार्तिदावानलप्रमेयंध्यायेद्रुमालिंगितविश्वरू-पम् ॥ ३ ॥ वंदेमहेशंसुरसिद्धसेवितंकल्पद्रुमैः पूजितपादपंकजम् । विद्याप्रदंभक्तजनैकवंद्यं ध्यायेचिरंकामदुघंप्रसन्नम् ॥ ४ ॥

योयोगमायांग्रहितेवपुंसांज्ञानंविधत्तेऽखिलवस्तुनीह । तं विश्वनाथं कलिकल्मषघ्नं ध्यायेऽशिवारिंजगदेकदेहम् ॥ ५ ॥

इति मनसा सावधानेनध्यायेत्

यह करनेके बाद फिर ध्यान करे ( ध्यायेनित्यं महेशं ) इत्यादि पाँच मंत्र जो पाँच श्लोकोंद्वारा मूल पाठमें लिखे हैं उनको पढते हुए पुष्पांजलि हाथमें लेकर शिवजीका ध्यान मनमें बडी सावधानीसे करे पुष्पांजलि शिवशिखरपर चढा दे ।

अथ लिंगनिरूपणम्

तत्रादौगणेशगौरीस्वामिकार्तिकनंदिगणमूर्तीः आम्रमूलमृत्तिकया संशुद्धमृत्तिकया वा गोदुग्धनाभिधार्य पुनः शमीदर्भाश्वत्थाम्रमूलवल्मीकमृत्तिकामेकीकृत्य कर्पूरहरिद्राचूर्णयुतांमधुमिश्रितगोदुग्धेन वा दुग्धमिश्रितजलेन मधुसहितेन यथोक्तमंत्रेणाहरणं तत्राहरणमंत्रः ॐ हौं हीं जूं सः हराय नमः इति मृदाहरणम् ॥ १ ॥

उसके बाद लिंग बनानेका प्रचार करे । तहां पहले गणेश गौरी स्वामिकार्तिक नंदीगण इनकी मूर्तियां आम्रमूलकी मिट्टीसे अथवा संशुद्ध पीली मिट्टीसे गोदुग्धमें सानकर बनालेवे । उसके बाद छिउंकरी कुशा पीपल आंव इनकी जडकी मिट्टी और

सांपकी बांबीकी मिट्टी इन पांच मृत्तिकाओंमें कपूर और हलदीका चूर्ण मिलाकर शहद मिले हुए गोदुग्धसे साने अथवा गोदुग्ध मिले-हुए जलसेही शहद मिलाकर साने और यथोक्त मत्रसे उस मिट्टीका आहरण अर्थात् मर्दन करे । मर्दन करनेका यह मंत्र है यथा—[ ॐ हौं ह्रीं जूँ सः हराय नमः ] इति मृदाहरणम् ॥ १ ॥

अथ लिंगसंघटनमंत्रः

ॐ हौं ह्रीं जूँसः महेश्वरायनमः इतिसंघटनम् । अथ लिंग-हस्तांजलौकृत्वा आवाहयेत् ॐ हौं ह्रीं जूँ सः पिनाकपाणये नमः कैलासशिखराद्रम्यात्समागच्छ मम प्रभो । पूजां जपं गृहीत्वा च यथोक्तफलदोभव ॥ १ ॥ देवदेवेशदेवेशं सर्वलोक-हितेरतम् यथोक्तरूपिणं देवं शंभुमावाहयाम्यहम् ॥ २ ॥ इत्या-वाह्य पूर्वरचितायां वेदिकायां शिखरोपरि ताम्रपात्रेस्थापयेत् । स्थापनमंत्रः ॐ हौं ह्रीं जूँ सः शूलपाणयेनमः इहस्थितो भव इति स्थापनम् ॥

फिर इस मर्दनकी हुई मिट्टीसे शिवलिंग बनावे, उसका यह मंत्र है यथा—[ ॐ ह्रौं ह्रीं जूंसः महेश्वराय नमः ] यह मंत्र मूलपाठमें भी सब लिखे हैं । इसके बादमें उस बनाये हुए शिव-लिंगकी हाथोंकी अंजलीमें शंभकर आवाहन करे, उसका यह मन्त्र मूलपाठमें लिखा है कि ( ॐ ह्रौं ह्रीं जूं सः पिनाकपाणयेनमः

इत्यादि लेकर शंभुमावाहयाम्यहम् ) यहांतक समझना, इस प्रकार आवाहन करके शिवशिखरपर ताम्रपात्रमें स्थापित करे. तब स्थापन करते समय यह मन्त्र पढे, यथा—( ॐ ह्रौं ह्रीं जूं सः शूलपाणयेनमः इह स्थितोभव )

अथ प्राणप्रतिष्ठाविधिः

तत्रहस्ताभ्यांपुष्पाण्यक्षतांश्चगृहीत्वाहस्तौ द्वौ लिंगस्योपरिकृत्वेदं पठेत् । ॐ आं ह्रीं क्रौंयंरंलं वंशं षंसंहंशूलपाणेः प्राणा इहागच्छन्तुइहतिष्ठंतुशूलपाणेः सर्वेंद्रियाणि इहागच्छंतु इहतिष्ठंतु अत्राधिष्ठानं कुर्वंतु ॐ हौं हां ह्रीं यंरंलंवंशंषंसंहं सदाशिवस्य प्राणाइहागच्छन्तु इहतिष्ठंतु ॐ ह्रीं हौं सदाशिवस्य सर्वेंद्रियाणि मनश्चक्षुःश्रोत्रजिह्वाघ्राणादय इमेऽसुष्मिन्पार्थिवलिंगे सुखं चिरंतिष्ठंतु स्वाहा । ॐ आं ह्रीं हौं सदाशिवस्यजीवइहस्थितिंकुरु ॐ ह्रौं ह्रीं जूं सः पिनाकिनेनमः यथोक्तरूपिशंभोइहागच्छ इह तिष्ठइहसंनिहितोभव सन्निचितोभव सन्निरुद्धोभव मम पूजां गृहाण । इतिप्रतिष्ठा ॥

इसके पीछे उस लिंगमें प्राणप्रतिष्ठाविधि करे अर्थात् दोनों हाथोंमें पुष्पाक्षत लेकर दोनों हाथ लिंगपर छायावत् आरोपित करके यह मंत्र पढे, अर्थात् मूल पाठमें ॐ आं ह्रीं क्रौंयंरंलवं इत्यादिसे लेकर इतिप्रतिष्ठापर्यंत जो प्राणप्रतिष्ठाकी विधिमें लिखा

है उसके सभी मंत्रोंको उच्चारण करे, फिर हाथ उठा ले, यह प्राणप्रतिष्ठाकी विधि है।

अथ प्रार्थनामंत्र

पुष्पाक्षतान् गृहीत्वा प्रार्थयेत् ॐ हौं ह्रीं जूँ सः पिनाकपाणये नमः स्वामिन्सर्वजगन्नाथयावत्पूजां करोम्यहम् । तावत्वं प्रीतिभावेन लिंगेऽस्मिन्संस्थितिं कुरु स्वाहा इति हस्तगत पुष्पाक्षतान् लिंगोपरिन्यसेत् । इति प्रार्थना अथ शिवलिंग दक्षिणभागे गणपत्यादिमूर्तीः संस्थाप्य यथोक्तमंत्रैः प्रपूजयेत् ततो वामांगे उमादेवीं स्नानादिविधिना संपूजयेत् तत्र मंत्रः—ॐ भगवत्यै उमादेव्यै शंकरप्रियायै नमः ॥

उसके बाद प्रार्थना करे, अर्थात् फूल अक्षत हाथमें लेकर ( ॐ हौं ह्रीं जूँसः पिनाकपाणये नमः स्वामिन् सर्वजगन्नाथ ) इत्यादि लेकर स्वाहापर्यंत जो मंत्र मूलपाठमें लिखा है, उसको पढकर हाथमें पुष्पाक्षत लेकर लिंगपर चढा दे, यह प्रार्थना हुई। इसके पीछे शिवलिंगके दाहिनी ओर गणपतिआदि मूर्तियां जो पहले बनाई थीं , उनको स्थापित करके अपने यथोक्त मंत्रोंसे सबका पूजन करे। फिर शिवजीके वाम अंगमें स्नान आदि विधिसे उमादेवीका पूजन करे, उसका यह मंत्र है—यथा ( ॐ भगवत्यै उमादेव्यै शंकरप्रियायै नमः ) ॥

### अथ ध्यानम्

पुष्पाक्षतान् गृहीत्वा ॐ ह्रौं ह्रीं जूँ सः पशुपतये नमः । ततो-मणिस्तंभविराजमानंहिरण्मयंद्वारकपाटतोरणम् । महार्हनीलाम-लवज्रवेदिकंतदेवध्यायेच्छिखरेशिवालयम् ॥ १ ॥ संतप्तहेमक-लशैर्बहुभिर्विचित्रैः प्रोद्भासितं स्फटिकसौधतलाभिरामम् । रम्यंचतच्छिवपुरंवरपीठमध्ये लिंगंचरत्नसहितंमनसाभिध्या-येत् ॥२॥ सर्वज्ञज्ञानविज्ञानप्रदानैकमहात्मने । नमस्तेदेवदेवश-सर्वभूतहितेरत ॥ ३ ॥ अनन्तकांतिसंपन्नह्यनन्तासनसंस्थित । अनन्तशक्तिशोभाढ्यपरमेशनमोस्तुते ॥ ४ ॥ पाहिपाहिगुणा-तीतह्युत्पत्तिस्थितिकारक । सर्वार्थसाधनोपायविश्वेश्वरनमो-स्तुते ॥ ५ ॥ स्वभावान्निर्मलाकारसर्वव्याधिविनाशक । योगि-योगमहायोगिन्योगेश्वर नमोस्तुते ॥ ६ ॥ पातालेनांतरिक्षेदश-दिशि गगने सर्वशैले समुद्रे भूमौलोष्टेचकाष्ठेक्षितिजलपवनेस्था-वरेजंगमे वा । बीजं सर्वौषधीनामसुरसुरपथेपुष्पपत्रे तृणाग्रे सर्वव्यापीशिवोयंयदिवसतिपुमान्नास्तिदेवो द्वितीयः

### अथ लिंगाष्टकप्रारंभः

ॐ ब्रह्ममुरारिसुरार्चितलिंगं निर्मलभास्करशोभि-तलिंगम् । जन्मजदुःखविनाशकलिंगं तं प्रणमामिसदाशिव-लिंगम् ॥ १ ॥ देवमुनीश्वरपूजितलिंगं कामविनाशनकारणलिं-

गम् । रावणदर्पविनाशनलिंगं तं प्रणमामि सदाशिवलिंगम् ॥२॥ सिद्धसुरासुरवन्दितलिंगं सर्वसुगंधसुलेपितलिंगम् । बुद्धिविवर्द्धनकारणलिंगं तं प्रणमामि सदाशिवलिंगम् ॥ ३ ॥ स्वर्णमहांमणिभूषितलिंगं दक्षकयज्ञविनाशनलिंगम् । नागप्रवेष्टितशोभितलिंगं तं प्रणमामि सदाशिवलिंगम् ॥ ४ ॥ कुंकुमचंदनलेपितलिंगं पंकजहारसुशोभितलिंगम् । संचितपापविनाशनलिंगं तं प्रणमामि सदाशिवलिंगम् ॥ ५ ॥ भावनभक्तिसुकेवललिंगं देवगणार्चितशोभनलिंगम् । भास्करकोटिप्रभाकरलिंगं तं प्रणमामि सदाशिवलिंगम् ॥ ६ ॥ अष्टदलोपरिशोभितलिंगं सृष्टिजहारजकारणलिंगम् । कष्टदरिद्रविनाशनलिंगं तं प्रणमामि सदाशिवलिंगम् ॥ ७ ॥ सुरगुरुसुरगणपूजितलिंगं सुरवनपुष्पसदाशिवलिंगम् । परमपदंपरमार्जनालिंगं तं प्रणमामि सदाशिवलिंगम् ॥ ८ ॥ लिंगमध्येजगत्सर्वंत्रैलोक्यं सचराचरम् । लिंगं ब्रह्म परं नास्ति तस्माल्लिंगं प्रपूजयेत् ॥ ९ ॥

उसके बाद फिर ध्यान करे अर्थात् फूल अक्षत हाथमें लेकर ( ॐह्रौंह्रींजूँसः पशुपतये नमः । ततोमणिस्तंभ ) इत्यादि लेकर सात श्लोकोंपर्यंत मूलपाठमें जो ध्यानमंत्र लिखे हैं उनको पढे, और अर्थोंको समझ समझकर ध्यान करे जैसा रूप शिवजीका उन श्लोकोंमें कहाहै । और इसी ध्यानके साथमें लिंगाष्टक भी मूलपाठमें

आठ नौ श्लोकोमें जो कहा है, उसको भी अर्थ समझकर शिवजीके सन्मुख पढे ॥

अथ लिंगस्नानम्

पंचामृतेन गंगोदकेनवा अभावे गोक्षीरमिश्रितकूपोदकेन-चकारयेत्। तस्यमंत्रः ओं हौं हीं जूँ सः पशुपतयेनमः ओनमः शंभवायचमयोभवायचनमः शंकरायच मयस्करायचनमः शिवाय च शिवतरायच ॥ १ ॥

लिंगस्नान अर्थात् पंचामृतसे अथवा गंगोदकसे अथवा गंगाजलके न होनेमें गोदुग्ध मिले कूपोदकसेही स्नान करावे, उसका यह मंत्र है, यथा ॐ हौं ह्रीं जूं सः पशुपतये नमः ॐ नम शंभवायच मयो-भवायच नमः शंकरायचमयस्कराचनमः शिवतरायच ॥ १ ॥

अथ चंदनम्

ओं हौं हीं जूँसः शिवायचंदनंसमर्पयामि २ ओं हौं हीं जूंसः शिवायरोचनां समर्पयामि ३ एवमनेनैवमंत्रेणाक्षतान् ४ पुष्पाणि ५ एकादशदूर्वांकुरान् ६ एकादशबिल्वपत्राणि ७ धत्तूरफलत्रिकम् ८ धूपम् ९ एकादशवर्तिकृतदीपम् १० नैवे-द्यम् ११ नानाफलानि १२ आचमनम् १३ लवंगकर्पूरयुतं ताम्बूलम् १४ पूगीफलम् १५ दक्षिणा १६ कर्पूरदीपः ॥१७॥

ॐ ह्रौं ह्रीं जूं सः शिवायचंदनं समर्पयामि इस मंत्रसे चंदन चढावे, और इसी मंत्रके अनुसार मूलपाठमें जो प्रत्येक वस्तुके मंत्र लिखे अथवा नहीं लिखे हैं, इनको भी योजना करके सब सामग्री यथाक्रमसे चढावे। उसका यह अनुक्रम है, कि चंदनके पीछे अक्षत फिर पुष्प दूर्वाके अंकुर ग्यारह विल्वपत्र ग्यारह धतूरेके फल तीन धूप दीपक ग्यारह बत्तीका, नैवेद्य नानाफल आचमन लवंग कर्पूरसहित तांबूल पूगीफल दक्षिणा कपूरकी ज्योति ॥

अथ आवरणपूजाप्रकारः

तत्राष्टमूर्तिपूजनं षोडशोपचारेण वा पंचोपचारेण वा तत्र सामान्यतया गंधाक्षतपुष्पधूपदीपनैवेद्यान् मिश्रिभूतान् पात्रे कृत्वा तत्पात्रं वामकरे धृत्वा शिवलिंगस्य परितोष्टदलपद्मस्य यद्वा शिखराकारस्य पूर्वकर्णिकाद्यारभ्यैकैकमूर्तिपूजनं चरेत्। यथा–ॐ शर्वाय क्षितिमूर्तये नमः पूर्वे १ ॐ भवाय जलमूर्तये- नमः ईशाने २ ॐ रुद्राय तेजोमूर्तये नमः उत्तरे ३ ॐ उग्राय वायुमूर्तयेनमो वायव्ये ४ ॐ भीमाय आकाशमूर्तयेनमः पश्चिमे ५ ॐ पशुपतये यजमानमूर्तये नमः नैर्ऋत्ये ६ ॐ महादेवाय सोममूर्तये नमो दक्षिणे ७ ॐ ईशानाय सूर्यमूर्तये नमः आग्नेय्याम् ८ इत्यावरणपूजासंबंध्यष्टमूर्तिपूजनम् ॥

आवरण पूजा करे अर्थात् अष्टमूर्तिका पूजन षोडशोपचारसे करे अथवा पंचोपचारसेही साधारण रीतिसे गंध अक्षत पुष्प धूप दीप नैवेद्योंको एक पात्रमें मिलाकर उस पात्रको बांयें हाथमें लेकर शिवलिंगके सब और अष्टदल पद्म अथवा शिखराकारकी पूर्वकर्णिकासे लेकर आठों कर्णिकाओंपर एक एक मूर्तिका पूजन करे। उस पूजनके निमित्त ( ओंशर्वायक्षितिमूर्तये ) इत्यादि आठ मन्त्र मूलपाठमें जो लिखे हैं उनमेंसे एक एक मंत्र पढकर पूर्व आदि एक एक कर्णिकामें पूजन करे, अर्थात् सब सामग्री थोडी थोडी केवल एक एक बार चढावे। इति आवरण पूजायामष्टमूर्ति-पूजनम्।

अथ बलिदानम्

ततोदेशकालौस्मृत्वावाञ्छितार्थफलप्राप्तये कृतपूजनस्य सांगतासिद्ध्यर्थं यथाशक्तिसंख्याकं यत्पदार्थं पूर्वमेव निश्चितं तदेकैकं तंदुलाक्षतसहितं प्रत्येकं षडक्षरेणशिवार्पणं कुर्यात्। अंतेतु उपहारार्थं जातीफलंमूलमंत्रेण दद्यात्। यथा ओं हौं हौं जूँ सः नमः शिवाय प्रसन्नपारिजातायस्वाहा। एतानि गंधाक्षतपुष्पधूपदीपनैवेद्यादीनि मयायथोक्तविधिनायानियानि समर्पितानि तैरेतज्जातीय फलबलिदानसमर्पणमात्रेण परात्माशिवो मयि प्रीयताम्। ममामुककामनामुकावधिदि

नांतरेण विधिहिमाविलम्बंकुरु शीघ्रमेव मम कार्यं साधयसाधय एषबलिः शिवाय सांगाय नमः स्वाहा ॥

इति बलिदानम्

उसके बाद नये सिरेसे फिर संकल्प करके लिये हुए पूजनकी सांगसिद्धिके लिये वह पदार्थ चढ़ावे, जो अपने वांछित अर्थका फल पानेके अर्थ यथाशक्ति और जितनी संख्यासे पहले निश्चित करके प्रथम तंत्रके अनुसार संचित किया हो । वह पदार्थ एक एक तंदुलाक्षत सहित षडक्षर मन्त्रसे शिवजीको अर्पण करे, परन्तु एक एक पदार्थके साथ एक एक अक्षतका होना यह उसी दशामें संभव है. कि जब फूल अथवा दूर्वानाल आदि वस्तुओंका मुख्य पदार्थ निश्चित किया हो अर्थात् यदि घृत दुग्ध आदिकी धारा हो तब आवश्यक नहीं, और यदि तंदुल आदि कोई अन्न हो तोभी नहीं, और अन्नोंमें एक मंत्रसे एकही दाना अन्नका नहीं किंतु जितना परिमाण उस अन्नका निश्चित हो चुका हो वही एक बार एक मन्त्रसे समर्पण करे, जैसे तंडुलोंकी पूजामें नौ प्रस्थ और दो पल मिलाकर एक मान कहा है, सोई एक मन्त्रसे समर्पण करे । इसके आगे देशकाल कार्यके अनुसार जैसा उचित हो वैसा अपनी बुद्धिसे विचार लेना कुछ निर्विकल्प नियमही नहीं है । यह पदार्थ नित्यके अनुमानसे समर्पण होचुकनेके बाद नित्यप्रति एक जाती-

फल बलि उपहारकी रीतिसे मूल मन्त्रसे समर्पण करे, यथा ( ॐ ह्रौं ह्रीँजूँस] शिवायनमः प्रपन्नपारिजाताय स्वाहा ) इस मूलमन्त्रसे लेकर और ( शीघ्रमेव मम कार्थं साधय ) यहांतक जो बलिदान-विधि मूलपाठमें लिखी है, उसके द्वारा वह ऊर्ध्वोक्त जातीफल समर्पण करे। इति बलिदानम् ॥

## अथ स्तोत्रम्

त्वं माता सर्वलोकानां त्वमेव जगतः पिता। त्वं भ्रातात्वं-सुहृन्मित्रं त्वंप्रियस्त्वंपितामहः ॥ १ ॥ नमस्ते भगवन्रुद्रभास्क-रामिततेजसे। नमोभवायदेवायरसायांबुमयायच ॥ २ ॥ सर्वा-यक्षितिरूपाय सदासुरभिरूपिणे। पशूनांपतयेतुभ्यं पावका-मिततेजसे ॥ ३ ॥ भीमायव्योमरूपाययशोरूपायतेनमः। महादेवायसोमायअनंताय नमो नमः ॥ ४ ॥ उग्राययजमाना-ययोगिनेकर्मयोगिने। नमस्तेकल्पवृक्षाय प्रत्यक्षफलदायिने॥५॥ पार्थिवानांचलिंगानांयन्मयापूजनंकृतम्। तेनमेभगवान्रुद्रो-वांछितार्थं प्रयच्छतु ॥ ६ ॥ शिवाग्रेपूजनं कृत्वास्तोत्रमेत-त्पठेत्सदा। सर्वार्थसाधनोपायमितिदेवैर्विनिश्चितम् ॥ ७ ॥ अथ मूलमंत्रजपः ॥ तत्रविनियोगः ॐ अस्य श्रीसदाशिवमंत्रस्य-वामदेवऋषिः पंक्तिश्छंदः। श्रीसदाशिवोदेवता। ममामुकफल-प्राप्तये जपे विनियोगः ॥

मूलपाठमें बलिदानके पीछे जो स्तोत्र सात् श्लोकोंका लिखा है, उसको शिवजीके सन्मुख पढे । उसके बादमें मन्त्रका विनि- योग जैसा मूलपाठमें लिखा है, वह करके मूलमंत्र उसीके आगे जैसा लिखा है, उसकी एक माला अष्टोत्तरी जपे ॥

मंत्रश्च । ॐ हौं ह्रीं जूँसः शिवायनमः प्रपन्नपारिजाताय- स्वाहा । इमंमंत्रंनित्यमष्टोत्तरशतंजपेत् । पश्चादनेननित्यमेका- दशाहुतीर्जुहुयात् ! तत्र प्रथमंहनुमन्मूर्तिं पताकापूजनं केवलं- सिंदूरादिधूपदीपनैवेद्यांततन्मंत्रेणैव कुर्यात् । अथैवंतीर्थविवर पूजनं कृत्वाग्निवेदिकायामग्निंसंस्थाप्यादौघृतेनैवचतुराहुतींद- द्यात् । यथा ॐ प्रजापतयेस्वाहा इदंप्रजापतये ॥१॥ ॐ इन्द्रा- यस्वाहा इदमिन्द्राय ॥ २ ॥ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय ॥ ४ ॥ हुतशेषं तु स्रुवेणैव जल- पात्रे प्रक्षिपेत् ॥

उसके बाद उसी मूलमंत्रसे नित्यप्रति ग्यारह आहुति अग्निमें छोडे । वहां इस हवनसे पहले हनुमान्‌जीकी मूर्तिवाली पताकाका पूजन केवल सिंदूर आदि धूप दीप नैवेद्य पर्यंत हनुमन्मंत्र द्वारा करे, फिर तीर्थविवरका पूजन करके, अग्निकी वेदीमें अग्नि स्थापन करके पहिले चार आहुति केवल घृतसेही अग्निमें छोडे । और उन चारोंका हुतशेष उसी स्रुवामेंसे किसी जलपात्रमें छोडता जाय यथा-

ॐ प्रजापतये स्वाहा इदं प्रजापतये ॐ इन्द्राय स्वाहा इदमिन्द्राय ॥ ॥ २ ॥ ॐ अग्नये स्वाहा इदमग्नये ॥ ३ ॥ ॐ सोमाय स्वाहा इदं सोमाय ॥ ४ ॥

ततो गणेशादिभ्योपि नमः इत्यंतेन तत्तन्मंत्रेणैकैकं हव्येनैवाहुतिंदत्त्वापुनरपिस्वस्वमंत्रैर्नवग्रहाणामप्याहुतीर्दद्यात् । ततो मूलमंत्रेणैकादशाहुतींदद्यात् । अथकामपूरकमंत्रेणनित्यमेकविंशत्यधिकतसंख्ययाहुतीर्दद्यात् । कामपूरकमंत्रश्च ओंह्रौं ह्रीं जूँसः नमः शिवाय । त्वं दातासर्वलोकानां कृपां कुरुमयिप्रभो । अमुकार्थेस्वाहा ॥

उसके बाद गणेशादिकोंको भी एक एक आहुति उनके चतुर्थ्यन्त नामके अंतमें नमः स्वाहा जोडकर हव्यसे नवग्रहोंको भी अपने अपने मंत्रसे आहुति एक एकसे दे । फिर पूर्वोक्त मूलमन्त्रसे ग्यारह आहुति हव्यसे दे । उसके बाद कामपूरक मन्त्र जो मूलपाठमें लिखा है, उससे नित्यप्रति १२१ एक सौ इक्कीस आहुति हव्यसे देवे ।

## अथ तर्पणविधिः

तत्र गोदुग्धगंगोदकाभ्यांसहजलेनैकादशदूर्वांकुरैः कुशाग्रभागैर्वादेवतीर्थेन तर्पयेत् । ॐ शिवाय नमः शिवंतर्पयामि १

ॐ भवायनमः भवंतर्पयामि २ ॐ ईशानायनमः ईशानंतर्पयामि ३ ॐ उग्रायनमः उग्रंतर्पयामि ४ ॐ मृडायनमः मृडंतर्पयामि ५ ॐ शशिशेखरायनमः शशिशेखरंतर्पयामि ६ ॐ शंकरानमः शंकरंतर्प० ७ ॐविश्वरूपायनमः विश्वरूपंतर्प० ८ ॐ कपर्दिने नमः कपर्दिनंत० ९ ॐ त्र्यंबकायनमः त्र्यंबकंतर्प० १० ॐ रुद्रायनमः रुद्रंतर्प० ११ ॥

उसके बाद तर्पणविधि करे अर्थात् गोदुग्ध और गंगाजल मिलेहुए जलसे ग्यारह दूर्वानालों अथवा ग्यारह कुशाग्रभागोंसे देवतीर्थद्वारा तर्पण करे। उन मन्त्रोंसे जो कि ग्यारह मन्त्र मूल पाठमें तर्पणके नामसे लिखे हैं।

अथ प्रार्थना—यत्रमूलमंत्रमुच्चार्य गोदुग्धशर्करामिश्रितजलस्य धारां दत्त्वा पुष्पांजलिं च समर्पयन् संप्रार्थयेत् यथा—ॐ ह्रौं ह्रींजूँसः शिवाय नमः प्रपन्नपारिजाताय स्वाहा ॥

उसके बाद प्रार्थना करे, इस प्रकारसे कि पहले पूर्वोक्त मूलमंत्रका उच्चारण करके गोदुग्ध और शर्करा मिलेहुए जलकी धारा शिवजीपर देकर और पुष्पांजलीको समर्पण करते हुए प्रार्थनासंबंधी चार श्लोक जो मूलपाठमें लिखे हैं उनको पढकर प्रार्थना करे। फिर प्रदक्षिणाका मंत्र मूलपाठमें जो लिखा है उसको पढकर

प्रदक्षिणा करे । उसके बाद ( हे चंद्रचूड ) इत्यादि आठ नौ श्लोकोंका स्तोत्र जो नीचे मूल पाठमें लिखा है, उसे पढना चाहिये॥

नमःशिवायसांबायसगणायससूनवे । निवेदयामिचात्मनं लिंगस्यशरणागतम् ॥ १ ॥ नमः शिवायसांबायकारणत्रय- हेतवे । निवेदयामिचात्मानंत्वंगतिःपरमेश्वर ॥ २ ॥ तावकस्त्व- द्गतप्राणस्त्वच्चित्तोहंसदामृड । कृपानिधइतिज्ञात्वाभूतनाथप्रसी- दमे ॥ ३ ॥ अज्ञानाद्यदिवाज्ञानाज्जपपूजादिकं मया । कृतंतद- स्तुसफलं कृपयातवशंकर ॥ ४ ॥ अथप्रदक्षिणा-यानियानिच- पापानि दुःखानिचपरमेश्वर । तानितानिविनश्यंतुप्रदक्षिणपदेपदे । इतिप्रदक्षिणीकृत्य । हे चंद्रचूडेत्यादिस्तोत्रं पठेत् ।

तद्यथा–हेचन्द्रचूडमदनांतक शूलपाणे स्थाणो गिरीश गिरिजेश महेशशंभो । भूतेशभीतभयसूदन मामनाथं संसारदुः- खगहनाज्जगदीशरक्ष ॥१॥ हेपार्वतीहृदयवल्लभचन्द्रमौले भूता- धिप स्मरहरत्रिदशाधिनाथ । हेवामदेव भव रुद्र पिनाकपाणे- संसारदुःखगहनाज्जगदीशरक्ष ॥ २ ॥ हे नीलकंठ वृषभध्वज पंचवक्त्रलोकेशशेषवलयप्रमथेशशर्व । हे धूर्जटेपशुपते गिरिजा- पतेमां संसारदुःखगहनाज्जगदीशरक्ष ॥ ३ ॥ हे विश्वनाथ शिव शंकरदेवदेवगंगाधर प्रमथनायक नंदिकेश । बाणेश्वरांधकरिपो हरलोकनाथ संसारदुःखगहनाज्जगदीशरक्ष ॥ ४ ॥ वाराणसी-

पुरपतेमणिकर्णिकेश वीरेश दक्षमखकाल विभोगणेश। सर्वज्ञ-सर्वहृदयैकनिवासनाथ संसारदुःखगहनाज्जगदीशरक्ष ॥ ५ ॥ श्रीमन्महेश्वरकृपामय हे दयालो हेव्योमकेशशितिकंठगणाधिनाथ। भस्मागरागनृकपालकलापमाल संसारदुःखगहनाज्जगदीशरक्ष ॥ ६ ॥ कैलासपर्वतनिवासवृषाकपीश मृत्युंजय त्रिनयनत्रिजगन्निवास नारायणप्रियदयामय शक्तिनाथसंसारदुःखगहनाज्जगदीशरक्ष ॥ ७ ॥ विश्वेशविश्वभवनस्थितिविश्वरूपविश्वात्मकत्रिभुवनैकगुरोभवेश। हे विश्ववंद्य करुणामयदीनबंधो संसारदुःखगहनाज्जगदीशरक्ष ॥ ८ ॥ गौरीविलासभुवनायमहेश्वरायपंचाननायशरणागतकल्पकाय ! सर्वायसर्वजगतामधिपाय तस्मै दारिद्र्यदुःखगहनाज्जगदीशरक्ष ॥ ९ ॥ इतिश्रीमच्छंकराचार्यविरचितं शिवस्तोत्रं संपूर्णम् इति श्रीस्तुत्वा गल्लनादंकुर्यात्। अथापिशक्तिश्चेत्तर्हि शिवकवचमपिश्रावयेद्वा !

उसके बाद गाल बजाकर गल्लनादसे शिवजीको प्रसन्न करे। इसके आगेभी यदि अपनेमें शक्ति अथवा श्रद्धा विशेष हो तो शिवकवचका भी पाठ सुनावे, अथवा नहीं। उसके बाद विसर्जन करे।

अथ विसर्जनम्

पुष्पाक्षतानि गृहीत्वा—ॐ महादेवाय यजमानमूर्तये नमः कृताकृताज्ञसां क्षमस्वममकृतां पूजां च हीत्वाममहृदि महाकैलासेवायथासुखंतिष्ठ ।

इति श्रीसकामशिवपूजाविधानं समाप्तम् ।

फूल अक्षत हाथमें लेकर विसर्जनका मंत्र जो मूल पाठमें लिखा है उसको पढ़ते हुए शिवजीपर अर्पण करे । और किंचित् उस पात्रको नीचेसे स्पर्श करे, जिसमें शिवलिंग विराजमान हो ।

इति श्रीसकामशिवपूजनविधानं भाषाटीकासमेतं समाप्तम् ।

---

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५.
फैक्स -०२०-२६८७४९०७.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष/फैक्स- ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-२४२००७८.

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान ;


**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,
पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डींग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष - ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-२४२००७८.


KHEMRAJ SHRIKRISHNADASS

